श्रीमद्भ्यो विद्वद्भ्यः श्री सत्यव्रतशास्त्रिभ्यः
સાદરમ્,
ભાઈશંકરઃ
૨૬।૧૨।૭૬



# श्रीसोमनाथप्रशस्तिः


रचयिता

**भाईशंकर पुरोहितः**

प्रधानाचार्य

मुंबादेवी संस्कृत महाविद्यालयः,

भारतीय विद्या भवन, बंबई-७

# પુરોવચન

શ્રીસોમનાથ મહાદેવના મંદિરનું નવનિર્માણ થતાં તે અંગેની સંપૂર્ણ વિગત સાથે 'સોમનાથપ્રશસ્તિ' તૈયાર કરાવવાની જવાબદારી શ્રીસોમનાથ ટ્રસ્ટ તરફથી મને સોંપવામાં આવેલ. તે પ્રમાણે શ્રી ભાઈશંકર પુરોહિત પાસે પ્રશસ્તિ તૈયાર કરાવી સ્વ. શ્રી ક. મા. મુન્શી (જે ટ્રસ્ટના એક સભ્ય હતા) ને અભિપ્રાય માટે આપી હતી. તેમણે એ તપાસી ટ્રસ્ટની અપેક્ષા પ્રમાણે સર્વથા યોગ્ય હોવાનું જણાવ્યું હતું એ વાતનો મને સંતોષ છે.

આ પ્રશસ્તિ શિલાલેખ રૂપે કોતરાવવા ટ્રસ્ટે નિર્ણય લીધો હતો. તે પહેલાં પુસ્તિકારૂપે ભક્તોને ઉપયોગમાં આવે એ હેતુથી એને છપાવી આજરોજ શ્રીસોમનાથ ભગવાનના ચરણોમાં ભક્તિભાવથી અર્પણ કરી કૃતાર્થ થાઉં છું.

૯૧, મેહર એપાર્ટમેન્ટસ-બી.
આલ્ટામાઉન્ટ રોડ, મુંબઈ–૨૬.
વિ. સં. ૨૦૨૮ અક્ષયતૃતીયા.
તા ૧૫-૫-૧૯૭૨.

ગુલાબકુંવર
રાજમાતા, નવાનગર.

Bharatiya Vidya Bhavan,
Chowpatty Road,
Bombay-7

January 20, 1971.

My dear Rajmata.

I have gone through the draft of the 'Prashasthi' and find it all right.

With warm regards from both of us.

Yours Sincerely,
K.M. Munshi

H. H. Rajmata Gulabkuwar of Navanagar,
Meher Apartments, B-9/1, (9th floor)
Anterey Road, (Off Altamount Road)
Bombay-26.

ॐ

# श्रीसोमनाथप्रशस्तिः

गंगानर्तितशेखरं गिरिसुताश्लिष्टं गणेशान्वितम्,
प्राभासेऽम्बुधिसन्निधौ स्थितिकरं ज्योतिर्मयेष्वादिमम् ।
शापार्तिप्रशमाय शीतलरुचेः कारुण्यवर्षाकरम्,
अष्टाभिस्तनुभिर्युतं सिततनुं श्रीसोमनाथं नुमः ।। १

प्रभासभूमिर्नु पुराणसंस्तुता त्रैलोक्यतीर्थं सकलार्तिहारि ।
प्रतिष्ठितो यत्र समुद्रकूले माङ्गल्यमूर्तिर्गिरिशः स्वयम्भूः ।। २

तं यादवानामधिपो महेन्द्रः सिषेविरेऽन्ये दिविजाश्च सिद्धाः ।
क्षयार्तिनाशाय च सोम एनं प्रसाद्य लेभेऽमृतसंभृताङ्गम् ।। ३

तत्रागतः पाण्डवमध्यमोऽर्जुनः कृष्णं दिदृक्षुर्यदुवंशनाथम् ।
शिवप्रसादाद्वसुदेवसूनोरनुज्ञया चोदहरत् सुभद्राम् ।। ४

दक्षपुत्रीर्विवाह्याथ चंद्रमाः सप्तविंशतिम् ।
सिषेवे रोहिणीं प्रीत्या, ह्युपेक्ष्यान्याः सुरूपिणीः ॥ ५

अतस्ताः पितरं प्राप्य रोहिण्यां शशिनो दृढं ।
पक्षपातं निवेद्याथ रुरुदुर्भूरि दुःखिताः ॥ ६

चंद्राय दत्तवान् शापं दक्षस्तु क्षयकारकम् ।
प्रसादितोऽवदच्चैनं "सोमनाथं हृदा भज ॥ ७

पश्चिमस्याम्बुधेस्तीरे रम्ये सोमपुरे शिवः ।
ज्योतिर्मयं वपुर्धृत्वा कुरुते सर्वमङ्गलम् ।। ८

प्रसाद्य तं महेशानं शापान्मुक्तो भविष्यसि ।"
दक्षस्येदं वचः श्रुत्वा हृष्टः सोमस्तथाऽकरोत् ।। ९

ततस्तुष्टः प्रभासेशः सोमस्य क्षयिणो वपुः ।
कृष्णपक्षे कृशं शुक्ले वृद्धिमद्विदधौ मुदा ।। १०

सौवर्णं निर्ममे सोमः शिवस्यालयमादरात् ।
प्रभासोदधितीर्थे च स्नाति पर्वणि पर्वणि ।। ११

गते बहुतिथे काले तत्पश्चाद् दशकंधरः ।
दधद् भक्ति परां शंभौ विदधे राजतं गृहम् ।। १२

प्रथमे विक्रमार्कस्य शताब्दे सोममन्दिरम् ।
नवीनां निर्मितिं लेभे वदन्त्येवं पुराविदः ।। १३

वलभ्यां शास्यमानायां मैत्रकैर्नूतनां तनुम् ।
दधार सोमनाथस्य मंदिरं मन्दतापहम् ।। १४

मूलराजेति विख्यातो गुर्जरेशः प्रतापवान् ।
प्रासादं कारयामास तृतीयं शिल्पकोत्तमैः ।। १५

देशदेशान्तरेभ्यस्तन् मन्दिरं ख्यातशिल्पकम् ।
परापतञ्ा् जनव्राताः शिवदर्शनलालसाः ।। १६

पूजयन्ति स्म सोमेशं रत्नै रौक्मैश्च भूषणैः ।
लक्ष्मीः सविग्रहा येन गिरिजेव शिवं श्रिता ।। १७

श्रावंश्रावं समृद्धि तां सोमंनाथस्य विस्तृताम् ।
गजनीस्थो महम्मूदो लुब्धो हर्तुं मनो दधे ।। १८

यवनानां सहस्राणि स आनीय समाक्रमीत् ।
प्रभञ्जन इवाज्ञातः प्रतीकारप्रभञ्जनः ।। १९

युयुधुः क्षत्रिया नैके प्राणत्यागञ्च चक्रिरे।
न शेकुस्तं पराकर्तुं धूमकेतुमिवोद्यतम् ।। २०

न धनेन स्तवेनापि नाक्रंदैश्च शमं ययौ।
स लिङ्गं भञ्जयामास लुण्ठयामास चालयम् ।। २१

पृष्ठेष्वासज्य रत्नानां गोणीरुष्ट्रशतस्य सः।
देवागारं जनास्थाञ्च चङ्क्रम्य निर्गतोऽधमः ।। २२

ततः समुदितो राजा भीमो भीमपराक्रमः।
सागारं सोमनाथं स प्रतिष्ठितमवाप्तवान् ॥ २३

मालव्यो भोजदेवश्च तत्र साह्यमवातरत्।
मण्डपं कर्णदेवस्तु निर्ममौ द्वारसन्निधौ ॥ २४

गुर्जरेट् सिद्धराजश्च जेता बर्बरकस्य यः।
मात्रा मीलनदेव्योक्तो यात्राकरमवारयत् ॥ २५

राजा कुमारपालाख्यो भावाचार्यप्रचोदितः।
प्रासादं कारयामास नवीनं सोममन्दिरे ॥ २६

चालुक्यो भीमदेवोऽपि 'मेघाह्वय'समाह्वयम्।
मण्डपं कारयाञ्चक्रे सोमदेवस्य तुष्टये ॥ २७

अल्लाद्दीनस्य सेनानीः संक्रामन् गुर्जरीभुवम्।
पुनश्च सोमनाथस्य मन्दिरं खण्डितं व्यधात् ॥ २८

जीर्णं मन्दिरमुद्धर्तुं महीपालः समादधौ।
मृते तस्मिंस्तु तत्पुत्रो 'रा'खेंगारश्चकार तत्॥ २९

किन्तु हन्त! पुनश्चान्ये देवमूर्तिप्रभञ्जकाः।
समाक्रामन् शिवं सौमं यवना युद्धदुर्मदाः॥ ३०

औरङ्गजेबनिर्दिष्टः सेनानीः स्थानिकः 'सुबा'।
सलिङ्गं मन्दिरं रम्यं बभञ्ज दर्पदुर्मदः॥ ३१

एवं भग्नं पुनरपि पुनः सृष्टिमासाद्य नूत्नां
राष्ट्रस्येव प्रचयविचयौ बोधयद् मानयन्त्नम् ।
सोमेशस्य पृथुतरवपुर्मन्दिरं शीर्णकायम्
आसीन्म्लानं पुनरपि नवां निर्मितिं कांक्षमाणम् ॥ ३२

न दृष्टा तादृशी भक्तिरीशे सोमस्य यादृशी ।
नापि कालप्रहाराणामट्टहासैर्विमानना ॥ ३३

अहल्या महिषी ख्याता साध्वी धर्मस्य रक्षिका ।
यया देवालया जीर्णा नैके नावीन्यमापिरे ।। ३४

तया देवः प्रभासस्थो निर्माय नूतनालयम् ।
प्रतिष्ठां प्रापितः किञ्चिद् दूरे शीर्णात्तु मन्दिरात् ।। ३५

पुनश्च सोमनाथस्य जयघोषेण पूरितम् ।
वियद् बभूव लोकानां सोमदर्शनहर्षिणाम् ।। ३६

अथाभवद् भारतराष्ट्रमुद्धुरं
प्रोत्सार्य वैदेशिकशासनं चिरात् ।
महात्मगांधेरनुयायिनां गणो
विनास्त्रशस्त्रैरजयत् स्वतंत्रताम् ।। ३७

बाल्यात्परं येन धृता महेच्छा
श्रीसोमनाथस्य पुनर्भवाय ।
शशंस यो वीरवरप्रगाथां
संरक्षणे सोमपतेर्मुहुश्च ।। ३८

मुन्शी कनैया स नुनोद वल्लभं
जनाग्रगं भारतलोहपूरुषम् ।
समागतं कार्यवशात् सुराष्ट्रकं
द्रष्टुं गिरीशं जलधेस्तटस्थितम् ।। ३९

प्रबोधितैतिह्यविवृद्धखेदितः ।
कलङ्कमुद्धर्तुमियेष वल्लभः ।
धृत्वा जलं पाणितले सरित्पते-
रुवाच मन्द्राम्बुधिनादसत्कृतम् ।। ४०

"शल्यं किलैतद् यदिदं पिनाकिन
आगारमास्ते पशुगोष्ठसन्निभम् ।।
विधाय नव्यं न न प्राप्नुमो वयं
विश्रान्तिमीशस्य सुरम्यमालयम्" ।। ४१

सा वीरवर्येण प्रचोदिता गीर् –
जनैरनेकैरभिनन्दिताऽऽसीत् ।
निर्माय संघं च सुकीर्तितानाम्
अन्वर्थतां प्रापयितुं निचिक्ये ।। ४२

तत्राभवज् जामपुराधिराजः
सौराष्ट्रपो दिग्विजयाभिधानः ।
एकाधिकं लक्षमदात् स हृष्टो
निर्माणकार्याय शिवालयस्य ।। ४३

पञ्चाशदेकं व्यतनोत् सहस्रं
सोमेशभङ्गानुशयप्रतप्तः ।
स श्यामदासोऽपि जुनागढस्य
विमुक्तिदः शासकवर्गनेता । ४४

# प्रथमं रिक्थमण्डलम्

दिग्विजयोऽथ जामेशो गाडगीलो महामतिः ।
उत्तरे राज्यपालश्च कनैयालालसंज्ञकः ॥ ४५

गांधिः श्यामलदासश्च बिरला व्रजमोहनः ।
चित्तरञ्जन राजा च दत्तात्रेयस्तु वामनः ॥ ४६

दयाशंकरसंज्ञश्च ' मुख्यमंत्री च ढेबरः ।
संवृत्ता अभवन्नेते प्रथमे रिक्थमण्डले ॥ ४७

अथारब्धमभूज्जीर्णालस्याश्मविसारणम् ।
मुन्शी-ढेबरसंज्ञाभ्यां कार्यते स्म स वै विधिः ।। ४८

६ ० ० २
षड्युते द्विसहस्रेऽथ विक्रमाब्दे च माधवे ।
खातकर्म समाधाय सोमनाथस्य हर्षदम् ।। ४९

जामेश्वरो न्यधाद् गीतामन्दिरस्यादिमां शिलाम् ।
यत्रोत्ससर्ज देवक्या नंदनः पार्थिवां तनुम् ।। ५०

अथोच्छ्वलत्समुत्साहाः शिल्पिनः कर्मकोविदाः ।
अहंपूर्वेति निर्मातुं परापेतुः शिवालयम् ।। ५१

वल्लभस्य तनुं क्षीणां दर्शंदर्शं जरावृताम् ।
शीघ्रं निर्माणसंघेन प्रतिष्ठेशस्य चिन्तिता ।। ५२

गर्भावाससमाप्त्यैव प्रतिष्ठायाश्चिकीर्षया ।
सामग्रीसंचयोऽकारि जनैस्तत्कर्मवेदिभिः ।। ५३

किन्तु हन्त! गतो लोकं स्वर्गिणां वल्लभस्तदा।
अदृष्ट्वा गिरिजाजानेः प्रतिष्ठां नूतनालये ।। ५४

वल्लभे स्वःस्थिते सोमनाथस्य रिक्थमण्डलम्।
प्रतिष्ठापुण्यकर्मार्थं वरितुं संदधेऽपरम्।। ५५

प्रथमो राष्ट्रपालो यः परमेशपरायणः।
आर्जवेऽनुपमो मान्यः संस्कृतेर्मूर्तविग्रहः।।
स राजेन्द्रप्रसादो हि प्रतिष्ठार्थं वृतोऽभवत् ।। ५६

वाईग्रामनिवासी यः शास्त्री लक्ष्मणसंज्ञकः ।
विद्याविचक्षणैः सार्धं प्रतिष्ठाचार्यकं दधौ ।। ५७

नानादिग्देशतीर्थेभ्य आनीतास्तोयमृत्तिकाः ।
नैकपूजार्थद्रव्याणां राशयश्चापि सञ्चिताः ।। ५८

विप्रोच्चारितवेदानां ध्वनिभिर्मङ्गलीकृते ।
सरित्पतेस्तटे तत्र पूजाकर्माप्यवर्तत ।। ५९

अश्व[७]-व्योम[०]-ख[०]-युग्मस्य[२] विक्रमाब्दस्य माधवे ।
मासे, शुक्रदिने प्रातर्मुहूर्ते मङ्गलोत्तमे ॥ ६०

लिङ्गस्य सोमनाथस्य राजेन्द्रो भारताग्रणीः ।
प्रतिष्ठां व्यतनोद्रम्यां जयनादैः सुसत्कृताम् ॥ ६१

भुशुण्डिध्वानघोषैश्च तूर्यस्वनविमिश्रितैः ।
दिक्पालाः सिद्धगन्धर्वा बभूवुर्हर्षतुन्दिलाः ॥ ६२

भारतीयस्य तत्त्वस्य धर्मस्य संस्कृतेस्तथा ।
निधिं या धरते दिव्या संस्कृता वाक् चिरन्तनी ।। ६३

तामुज्जीवयितुं विश्व-संस्कृत-पर्षदङ्किता ।
निर्मिताऽभूत्तदा संस्था गैर्वाणीतत्त्वकोविदैः ।। ६४

पद्मनाभस्य दासो यो बलरामेति कीर्तितः ।
त्रावणकोरपो धीमानस्याः प्रामुख्यमावहत् ।। ६५

पुरुषोत्तमदासश्च टंडनो वाग्विदां वरः ।
उद्घाटनविधिं चक्रे नन्दनं विबुधात्मनाम् ।। ६६

कनैयालाल मुन्शी वै भारतैक्यधृतव्रतः ।
सूत्रधारो बभूवास्याः पर्षदो भारतीजुषाम् ।। ६७

एवं समाप्य हर्षेण सोमेशस्थापनाविधिम् ।
देहोत्सर्गे महातीर्थे कृष्णमूर्तिनिवेशिता ।। ६८

शिखरे सोमनाथस्य निर्मिते कलशादयः ।
यथाविधि समारोप्य जामेशेन प्रपूजिताः ।। ६९

गुलाबकुंवरीत्याख्यपत्न्या युक्तः स दिग्जयः ।
महाप्रासादसंयुक्तां चक्रे विष्ण्वादिसंस्थितिम् ।। ७०

देवागारविनिर्माणे सोमपूराः सुविश्रुताः ।
प्रभाशंकर-तद्वंश्यः सुंदरं मन्दिरं व्यधात् ।। ७१

अथाभवल्लोकप्रसिद्धिरस्या
नवीकृता पश्चिमदेवतायाः ।
यतः समायान्ति जनाः समन्ताद्-
इमां भवक्लेशविनाशदक्षाम् ॥ ७२

पुनः स एवास्ति समुद्रघोषो
वप्रोच्छ्वलत्तोयमहौघजन्यः ।
करोति यो मन्द्रनिनादनादितां
निरन्तरां सोमपतेः सपर्याम् ॥ ७३

अत्रोत्सवेषु प्रणयात् कृतेषु
सम्मर्दगानां शिवभक्तिभाजाम् ।
घंटास्वनैः स्तोत्रचयैश्च गीतैर्-
निनादितं भाति नभः समन्तात् ॥ ७४

संपन्नैवं मधुरमधुरा विश्वदेवप्रतिष्ठा,
सिद्धा चैवं हृदि चिरधृता भारतीया मनीषा ।
शर्वो दिश्याद् विमलमनसामुन्नतिं धर्मनिष्ठां
सस्यैः श्यामां सरसवसुधामृद्धिमल्लोकयात्राम् ॥ ७५

सोमेशोऽयं वितरतु शिवं भक्तिनम्रान्तराणां,
लोकेशानां दिशतु च मनो निर्मले लोकवृत्ते ।
राष्ट्रस्यास्योन्नमयतु शिरः शौर्यशीलप्रकर्षात्,
विश्वं कुर्याद् विगतकलहं सौमनस्यप्रकाशात् ।। ७६

७ २ ० २
सप्त युग्म ख युग्माब्दे विक्रमार्कमहीपतेः ।
प्रशस्तिः सोमनाथस्य रचितैतिह्यदायिनी ।। ७७

पुरोहितेत्युपाह्वेन भाईशंकरशास्त्रिणा ।
अर्पिता पार्वतीशस्य सेयं भक्त्या पदाम्बुजे ।। ७८

---



गंगानर्त्तितशेखरं गिरिसुताश्लिष्टं गणेशान्वितम्,
प्राभासेऽम्बुधिसन्निधौ स्थितिकरं ज्योतिर्मयेष्वादिमम् ।
शापार्तिप्रशमाय शीतलरुचेः कारुण्यवर्षाकरम्,
अष्टाभिस्तनुभिर्युतं सिततनुं श्रीसोमनाथं नुमः ।।



प्रकाशक—सोमनाथ ट्रस्ट

एसोसिएटेड एडवर्टाइझर्स एन्ड प्रिन्टर्स, ताडदेव, मुंबई – ३४